अथ

# ककारादिकृष्णाऽष्टोत्तर सहस्रनामस्तोत्रम्।

श्रीगणेशाय नमः॥अथ ककारादि कृष्णाष्टोत्तरसहस्रनाम स्तोत्रम् ॥ व्यास उवाच ॥

कृतार्थोहं मुनिश्रेष्ठ त्वत्प्रसादान्न संशयः ॥ यतो मया परं ज्ञानं ब्रह्मगीतात्मकं श्रुतम् ॥ ॥१॥ परं तु येन मे जन्म न भवेत्कर्हिचिन्मुने ॥ पूर्णब्रह्मैकविज्ञानविरहो न च जायते ॥ ॥ २ ॥ येन मे दृढविश्वासो भक्तावत्पद्यते हरेः ॥ कालपाशविनिर्मुक्तिः कर्मबंधविमोचनम् ॥ ३ ॥ जन्ममृत्युजराव्याधि

क्लेशक्षोभनिवारणम् ॥ कलिकालभयध्वंसो ब्रह्मज्ञानं दृढं हृदि ॥ ४ ॥ कीर्तिः श्रीः सन्मतिः शांतिर्भक्तिर्मुक्तिश्च शाश्वती ॥ जायते तदुपायं मे वद वेदऽविदां वर ॥ ५ ॥ नारद उवाच ॥ तत्त्वमेकं त्रिलोकेषु पूर्णानंदो जगद्गुरुः ॥ दैवतं सर्वदेवानां प्राणिनां मुक्तिकारणम् ॥ ६ ॥ तारणं भवपाथोब्धे दुःखदारिद्र्यहारणम् ॥ तद्रूपं सर्वदा ध्येयं

योगिभिर्ज्ञानिभिस्तथा ॥ ७ ॥ ज्ञेयमेव स
दा सिद्धैः सिद्धांतेन दृढीकृतम् ॥ वेदांते गी
तमाख्यानां हितकृत्कष्टनाशनम् ॥ ८ ॥
सर्वेषामेव जीवानां कर्मपाशविमोचनम् ॥
सत्यज्ञानदयासिंधोः कादि नामसहस्रकम्
॥ ९ ॥ अतिगुह्यतरं लोके नाकेऽपि ब्रह्मवा
दिनाम् ॥ कालपाशविनिर्मुक्तेर्हेतुभूतं सना
तनम् ॥ १० ॥ कामार्तिशमनं पुंसां दुर्बुद्धि

क्षयकारकम् ॥ सर्वव्याध्याधिहरणं शरणं
साधुवादिनाम् ॥ ११ ॥ कपटच्छलपाखंड
क्रोधलोभविनाशनम् ॥ अज्ञानाधर्मविध्वं
सि श्रितानन्दविवर्द्धनम् ॥ १२ ॥ विज्ञानो
द्दीपनं दिव्यं सेव्यं सर्वजनैरिह ॥ पठनीयं
प्रयत्नेन सर्वमंत्रैकदोहनम् ॥ १३ ॥ मोह
मात्सर्यमूढानामगोचरमलौकिकम् ॥ पूर्णा
नन्दप्रसादेनलभ्यमेतत्सुदुर्लभम् ॥ १४ ॥

पूर्णानन्दः स्वयं ब्रह्म भक्तोद्धाराय भूतले॥
अक्षराकारमाविश्य स्वेच्छयानन्तविक्रमः
॥ १५॥ कृष्णनाम्नात्र विख्यातः स्वयं नि
र्वाणदायकः॥ अत एवात्र वर्णानां ककार
स्तन्मयो मतः॥ १६ ॥ कादिनामानि लो
केऽस्मिन्दुर्लभानि दुरात्मनाम् ॥ भक्तानां
सुलभानीह निर्मलानां यतात्मनाम्॥१७॥
ज्ञेय एव स्वयं कृष्णो ध्येय एव निरंतरम्॥

क. कृ. ३

अमेयोप्यनुमानेन मेय एवात्मभावतः
॥ १८ ॥ ब्रह्मगीतादिभिर्गेयः सेवनीयो मु
मुक्षुभिः ॥ कृष्ण एव गतिः पुंसां संसारे
स्मिन्सुदुस्तरे ॥ १९ ॥ कालास्ये पतितं
सर्वं कालेन कवलीकृतम् ॥ कालाधीनं का
लसंस्थं कालोत्पन्नं जगत्त्रयम् ॥ २० ॥ स
कालस्तस्य भृत्योस्ति तदधीनस्तदुद्भवः॥
तस्मात्सर्वेषु कालेषु कृष्ण एव गतिर्नृणा

सह. ३

म् ॥ २१ ॥ अन्ये देवास्त्रिलोकेषु कृष्णाश्र
यपरायणाः ॥ कृष्णमाश्रित्य तिष्ठंति कृष्ण
स्यानुचरा हि ते ॥ २२ ॥ यथा सूर्य्योदये
सर्वास्तारकाः क्षीणकांतयः । सर्वे देवास्तथा
व्यास हतवीर्या हतौजसः ॥२३॥ न कृष्णा
दितरत्तत्वं न कृष्णादितरत्सुखम् ॥ न कृ
ष्णादितरज्ज्ञानं न कृष्णादितरत्पदम् २४
कृष्ण एव जगन्मित्रं कृष्ण एव जगद्गुरुः ॥

कृष्ण एव जगत्त्राता कृष्ण एव जगत्पिता ॥
२५ कृष्ण कृष्णेति ये जीवाः प्रवदन्ति निरं
तरम् ॥ न तेषां पुनरावृत्तिः कल्पकोटिशतैर
पि २६ कृष्णे तुष्टे जगन्मित्रं कृष्णे रुष्टे हि त
द्रिपुः ॥ कृष्णात्मकं जगत्सर्वं कृष्णमाश्रि
त्य तिष्ठति ॥२७॥ यथा सूर्योदये सर्वे पदा
र्थज्ञानिनो नराः ॥ कृष्णसूर्योदयेऽन्तःस्थे त
थात्मज्ञानिनो बुधाः ॥२८॥ तस्मात्त्वं सर्व

भावेन कृष्णस्य शरणं व्रज ॥ नान्योपाय
स्त्रिलोकेषु भवाब्धिं तरितुं सताम् ॥२९॥
श्रीव्यास उवाच ॥ कृतार्थोहं मुनिश्रेष्ठ त्व
त्प्रसादादतंद्रितः ॥ यस्माच्छ्रुतं मया ज्ञा
नं श्रीकृष्णस्य महात्मनः॥३०॥ परं तु श्रो
तुमिच्छामि त्वत्तो ब्रह्मविदांवर ॥ नैवास्ति
त्वत्समो ज्ञानी त्रिषु लोकेषु कुत्रचित् ३१
कथं मे करुणासिंधुः प्रसन्नो जायते हरिः॥

क. कृ.

केनोपायेन तद्भक्तिर्निश्चला जायते मयि ॥ ॥३२॥केनोपायेन तद्दास्यं सखित्वं देवदुर्लभम् ॥ तदधीनत्वमेवाथ तत्स्वरूपैकता तथा ॥ ३३ ॥ एतन्मे वद देवर्षे सर्वशास्त्रार्थदोहनम् ॥ विना कृष्णं गतिर्नाऽस्ति कृष्ण एव गतिर्मम ॥३४ ॥ नारद उवाच ॥ श्रीकृष्णः करुणासिंधुर्दीनबंधुर्जगद्गुरुः ॥ कादिनामहस्त्रेण विना नान्यैश्च साधनैः

॥ ३५ ॥ प्रसन्नो जायते नूनं तस्मात्ता
नि वदामि ते ॥ अवाच्यान्यपि ते वच्मि
त्रिषु लोकेषु कुत्रचित् ॥ ३६ ॥ न प्रसिद्धा
नि दुष्टानां दुर्लभानि महीतले ॥ सुलभानी
ह भक्तानां भविष्यंति तदाज्ञया ॥ ३७ ॥ पुरा
सारस्वते कल्पे रम्ये वृन्दावने निशि ॥ नि
जभक्तहितार्थाय वेणुनादं हरिः स्वयम् ॥
॥ ३८ ॥ चकारोच्चैर्मनोहारी विहारी वैरिना

शनः ॥ तदा गोपीजनः सर्वः सहसोत्थाय
विह्वलः ॥ ३९ ॥ निशीथे सकलं त्यक्त्वाऽग
च्छद्वेणुवशीकृतः ॥ तेन सार्द्धं कृता क्रीडा
स्वप्नवद्रासमंडले ॥ ४० ॥ तत्रांतर्धानम
गमत्ताश्चित्तमपहृत्य सः ॥ तदा ता गोपि
काः सर्वाः दिङ्मूढा इव गोगणाः ॥ ४१ ॥ स
मीपस्थमपि भ्रांत्या तंनापश्यन्नरोत्तमम् ॥
इतस्ततो विचिन्वंत्यः कस्तूरीमृगवद्वने ॥

॥ ४२॥ अत्यंतव्याकुलीभूताः खंडिताः श्रुतयो यथा ॥ ब्रह्मज्ञानाद्यथा विप्राः कालमायावशानुगाः ॥४३॥ तथैता गोपिका व्यास कृष्णदर्शनलालसाः ॥ अत्यंतविरहाक्रांतास्तच्चित्तास्तत्परायणाः॥४४॥भ्रमरीकीटवल्लीना नान्यत्पश्यंति तद्विना ॥ विरहानलदग्धांग्यः कामांधा भयविह्वलाः ॥ ४५ ॥ स्वात्मानं न विदुर्दीना ज्ञानहीना नरा इव॥

तल्लीनमानसाकारा विकारादिविवर्जिताः।
॥ ४६ ॥ तदातिकृपया कृष्णो भक्ताधीनो
निरंकुशः॥ आविर्बभूव तत्रैव यथा सूर्यो नि
शात्यये ॥ ४७ ॥ तदा ता गोपिकाः सर्वा
दृष्ट्वा प्राणपतिं हरिम् ॥ जन्मांतरमिभं हि
त्वा विरहाग्निं सुदुःसहम् ॥ ४८ ॥ तवाव
तारवन्मत्वा हर्षनिर्भरमानसाः ॥ पद्मि
न्य इव कृष्णार्कं दृष्ट्वा विकसिता स्तदा ॥

॥४९॥ पपुर्नैत्रपुटैरेनं नच तृप्तिमुपाययुः ॥
क्रीडायाः शांतिमापन्ना मत्वा कृष्णं जगद्गुरुम् ॥ ५० ॥ तं प्रत्यूचुः प्रीतियुक्ता विरक्ता विरहानलात्॥आसक्तास्तत्पदे नित्यं विरक्ता इव योगिनः ॥ ५१ ॥ गोप्य ऊचुः ॥ हे नाथ याहि नो दीनास्त्वन्नाथास्त्वत्परायणाः ॥ तवालंबनजीवंत्यस्तव दास्यो वयं सदा ॥ ५२ ॥ केनोपायेन भो कृष्ण न भवे

द्विरहस्तव ॥ न भवेत्पुनरावृत्तिर्नच संसारवासना ॥ ५३ ॥ त्वयि भक्तिर्दृढा केन सखीत्वं जायते तव ॥ तदुपायं हि नो ब्रूहि कृपां कृत्वा दयानिधे ॥ ५४ ॥ श्रीकृष्ण उवाच॥अत्यंतदुर्लभः प्रश्नस्त्वदीयः कलिनाशनः ॥ न कदापि मया प्रोक्तः कस्याप्यग्रे व्रजाङ्गनाः ॥ ५५ ॥ तथाप्यत्यंतभावेन युष्मद्भक्त्यावशीकृतः ॥ रहस्यं कथयाम्यद्य

मदीयं मद्भक्तिप्रदम् ॥ ५६ ॥ कादिनामसह
स्राख्यमविख्यातं धरातले ॥ गुह्याद्गुह्यतरं
गोप्यं वेदशास्त्रार्थदोहनम् ॥ ५७ ॥ अलौ
किकमिदं पुंसां सद्यः श्रेयस्करं सताम् ॥
शब्दब्रह्ममयं लोके सूर्य्यवच्चित्प्रकाशनम्
॥ ५८ ॥ संसारसागरे घोरे प्लवतुल्यं मनी
षिणाम् ॥ सर्वसिद्धिप्रदं पुंसामज्ञानार्णव
शोषणम् ॥ ५९॥ जातिस्मृतिप्रदं विद्यावर्द्ध

नं मोहनाशनम् ॥ ब्रह्मज्ञानरहस्यं मे कादि
नामसहस्रकम् ॥६०॥ तदेवाहं प्रवक्ष्यामि
शृणुध्वं भक्तिपूर्वकम् ॥ यस्य स्मरणमात्रेण
जीवन्मुक्तिः प्रजायते ॥६१॥ ॐ अस्य श्रीपु
राणपुरुषोत्तमश्रीकृष्णकादिसहस्रनाममं
त्रस्य नारद ऋषिः अनुष्टुप्छन्दः सर्वात्मस्व
रूपी श्रीपरमात्मा देवता ॥ ॐ इति बीजं
नम इति शक्तिः कृष्णायेति कीलकं धर्मार्थे

काममोक्षार्थे श्रीकृष्णप्रीत्यर्थे जपे विनियो
गः ॥ अथ करन्यासः ॥ ॐ कालात्मेत्यंगु
ष्ठाभ्यां नमः॥ॐ कीर्तिवर्द्धनेति तर्ज्जनीभ्यां
नमः ॥ ॐ कूटस्थसाक्षीति मध्यमाभ्यां
नमः॥ॐ कैवल्यज्ञानसाधनेति अनामिका
भ्यां नमः ॥ ॐ कौस्तुभोद्भासितोरस्केति
कनिष्ठिकाभ्यां नमः ॥ ॐ कंदर्प्पज्वरना
शनेति करतलकरपृष्ठाभ्यां नमः ॥ एवं

हृदयादिः ॥ ॐ हृदयाय नमः ॥ ॐ का
लिंवर्धनेति शिरसे स्वाहा ॥ ॐ कूटस्थसाक्षी
ति शिखायै वषट् ॥ ॐ कैवल्यज्ञानसाधने
ति कवचाय हुम् ॥ ॐ कौस्तुभोद्भासितो
रस्केति नेत्रत्रयाय वौषट् ॥ ॐ कन्दर्पज्व
रनाशनेत्यस्त्राय फट् ॥ अथ ध्यानम् ॥ वंदे कृ
ष्णं कृपालुं कलिकुलदलनं केशवं कंसशत्रुं १०
धर्मिष्ठं ब्रह्मनिष्ठं द्विजवरवरदं कालमाया

तिरिक्तम् ॥ कालिंदीकेलिसक्तं कुवलयन
यनं कुंडलोद्भासितास्यं कालातीतस्वधामा
श्रितनिजयुवतीवल्लभं कालकालम् ॥६२॥
श्रीकृष्ण उवाच ॥ ॐ कृष्णः[१] कृष्णात्मकः[२]
कृष्णस्वरूपः[३] कृष्णनामधृक्[४] ॥ कृष्णाङ्गः[५]
कृष्णदैवत्यः[६] कृष्णारक्तविलोचनः[७] ॥ ६३ ॥
कृष्णाश्रयः[८] कृष्णवर्त्मा[९] कृष्णालक्ताभिरक्ष
कः[१०]॥ कृष्णेशप्रीतिजनकः[११] कृष्णेशप्रियकार

केः॥६४॥ कृष्णेशारिष्टसंहर्ता कृष्णेशप्राण वल्लभः ॥ कृष्णेशानन्दजनकः कृष्णेशा युर्विवर्द्धनः ॥ ६५ ॥ कृष्णेशारिसमूहघ्नः कृष्णेशाभीष्टसिद्धिदः ॥ कृष्णाधीशः कृष्ण केशः कृष्णानन्दविवर्द्धनः ॥६६॥ कृष्णाग रुसुगंधाढ्यः कृष्णागरुसुगंधिवित् ॥ कृष्णागरुविवेकज्ञः६७कृष्णागरुविलेपनः ॥ कृतज्ञः कृतकृत्यात्मा कृपासिंधुः कृपा

करः ॥ [३०]कृष्णानन्दैकवरदः [१]कृष्णान
न्दपदाश्रयः ॥ ६८ ॥ [२]कमलावल्लभाकारः
[३]कलिघ्नः [४]कमलापतिः ॥ [५]कमलानन्दसंपन्नः
[६]कमलासेविताकृतिः ॥ ६९ ॥ [७]कमलामान
सोल्लासी [८]कमलामानदायकः ॥ [९]कमलालं
कृताकारः [४०]कमलाश्रितविग्रहः ॥ ७० ॥ [१]क
मलामुखपद्मार्कः [२]कमलाकरपूजितः ॥
[३]कमलाकरमध्यस्थः [४]कमलाकरतोषितः ॥

॥ ७१ ॥ कमलाकरसंसेव्यः कमलाकरभू
षितः ॥ कमलाकरभावज्ञः कमलाकरसं
युतः ॥ ७२ ॥ कमलाकरपार्श्वस्थः कमला
कररूपवान् ॥ कमलाकरशोभाढ्यः कम
लाकरपंकजः ॥ ७३ ॥ कमलाकरपापघ्नः
कमलाकरपुष्टिकृत् ॥ कमलारूपसौभा
ग्यवर्द्धनः कमलेक्षणः ॥ ७४ ॥
कमलाकलितांघ्र्यब्जः कमलाकलिताकृ

तिः ॥ [९]कमलाहृदयानन्दवर्द्धनः [६०]कमला
प्रियः ॥ ७५ ॥ [१]कमलाचलचित्तात्मा
[२]कमलालंकृताकृतिः ॥ [३]कमलाचलभावज्ञः
[४]कमलालिंगिताकृतिः ॥ ७६ ॥ [५]कमलाम
लनेत्रश्रीः [६]कमलाचलमानसः ॥ [७]कमला
परमानन्दवर्द्धनः कमलाननः ॥ ७७ ॥
[९]कमलानन्तसौभाग्यवर्द्धनः [७०]कमलाश्रयः।
[१]कमलाविलसत्पाणिः [२]कमलामललोचनः॥

॥ ७८ ॥ कमलामलभालश्रीः कमलाक
रपल्लवः ॥ कमलेशः कमलभूः कमलान
न्ददायकः ॥ ७९ ॥ कमलोद्भवभीतिघ्नः
कमलोद्भवसंस्तुतः ॥ कमलाकरपाशाढ्यः
कमलोद्भवपालकः ॥ ८० ॥ कमलासनसं
सेव्यः कमलासनसंस्थितः ॥ कमलासन
रोगघ्नः कमलासनपापहा ॥ ८१ ॥ कम
लोदरमध्यस्थः कमलोदरदीपनः ॥ कम

लोदरसंपन्नः [९]कंमलोदरसुंदरः ॥ ८२ ॥ [१०]कं
नकालंकृताकारः [१]कंनकालंकृतांबरः ॥ [२]कं
नकालंकृतागारः[३]कंनकालंकृतासनः॥८३॥
[४]कंनकालंकृतास्यश्रीः [५]कंनकालंकृतास्पदः
[६]कंनकालंकृतांघ्र्यब्जः [७]कंनकालंकृतोदरः ॥
॥ ८४ ॥ [८]कंनकांबरशोभाढ्यः [९]कंनकाम्ब
रभूषणः ॥ [१००]कंनकोत्तमभालश्रीः [१]कंनकोत्त
मरूपधृक् ॥ ८५ ॥ [२]कंनकागारमध्यस्थः

क. कृ. १४

सह.

[३]कनकागारकारकः ॥ [४]कनकाचलमध्यस्थः
[५]कनकाचलपालकः ॥ ८६ ॥ [६]कनकाचलशो
भाढ्यः [७]कनकाचलभूषणः ॥ [८]कनकैकप्रजा
कर्ता [९]कनकैकप्रदायकः ॥८७॥ [११०]कलाननः
[१]कलरवः [२]कलस्त्रीपरिवेष्टितः ॥ [३]कलहंसपरि
त्राता [४]कलहंसपराक्रमः ॥ ८८ ॥ [५]कल
हंससमानश्रीः [६]कलहंसप्रियंकरः ॥ [७]कल
हंसस्वभावस्थः [८]कलहंसैकमानसः ॥८९॥

कलहंससमारूढः कलहंससमप्रभः ॥ क-
लहंसविवेकज्ञः कलहंसगतिप्रदः ॥ ९० ॥
कलहंसपरित्राता कलहंससुखास्पदः ॥ क-
लहंसकुलाधीशः कलहंसकुलास्पदः ॥ ९१
कलहंसकुलाधारः कलहंसकुलेश्वरः ॥ क-
लहंसकुलाचारी कलहंसकुलप्रियः॥ ९२॥
कलहंसकुलत्राता कलहंसकुलात्मकः॥क-
वीशः कविभावस्थः कविनाथः कविप्रियः

॥ ९३ ॥ ॐकविमानसहंसात्मा ॐकविवंशावि भूषणः॥ ॐकविनायकसंसेव्यः ॐकविनायकपालकः ॥ ९४ ॥ ॐकविवंशैकवरदः ॐकविवंशशिरोमणिः ॥ ॐकविवंशविवेकज्ञः ॐकविवंशप्रबोधकः॥ ९५ ॥ ॐकविवंशपरित्राता ॐकविवंशप्रभाववित् ॥ ॐकवित्वामृतसंसिद्धः ॐकवित्वामृतसागरः ॥ ९६ ॥ ॐकवित्वाकारसंयुक्तः ॐकवित्वाकारपालकः ॥

[१]कवित्वाद्वैतभावस्थः [२]कवित्वाश्रयकारकः
॥ ९७ ॥ [३]कवींद्रहृदयानन्दी [४]कवीन्द्रहृदया
स्पदः ॥ [५]कवीन्द्रहृदयांतस्थः [६]कवीन्द्र
ज्ञानदायकः ॥ ९८ ॥ [७]कवीन्द्रहृदयांभोज
प्रकाशैकदिवाकरः ॥ [८]कवीन्द्रहृदयांभोजा
ह्लादनैकनिशाकरः ॥ ९९ ॥ [९]कवीन्द्रहृद
याब्जस्थः [१०]कवीन्द्रप्रतिबोधकः ॥ [१]कवीन्द्रा
नन्दजनकः [२]कवीन्द्राश्रितपंकजः ॥ १०० ॥

कविशब्दैकवरदः कविशब्दैकदोहनः ॥ क
विशब्दैकभावस्थः कविशब्दैककारणः ।१।
कविशब्दैकसंस्तुत्यः कविशब्दैकभूषणः ।
कविशब्दैकरासिकः कविशब्दाविवेकवित् २
कवित्वब्रह्मविख्यातः कवित्वब्रह्मगोचरः ।
कविवाणीविवेकज्ञःकविवाणीविभूषणः ।३।
कविवाणीसुधास्वादी कविवाणीसुधाकरः।
कविवाणीविवेकस्थः कविवाणीविवेकवि

त् ॥ ४ ॥ कंविवाणीपरित्राता कविर्वाणीवि
लासवान् ॥ कंविशक्तिप्रदाता च कंविश
क्तिप्रवर्तकः ॥ ५ ॥ कंविशक्तिसमूह
स्थः कंविशक्तिकलानिधिः ॥ कंलाकोटिस
मायुक्तः कंलाकोटिसमावृतः ॥ ६ ॥ कंला
कोटिप्रकाशस्थः कंलाकोटिप्रवर्तकः ॥ कं
लानिधिसमाकारः कलानिधिसमन्वितः ॥
७ कंलाकोटिपरित्राता कंलाकोटिप्रवर्द्धनः ।

क. कृ. १७

कलानिधिसुधास्वादी कलानिधिसमाश्रितः ॥८॥ कलंकरहिताकारः कलंकरहितास्पदः ॥ कलंकरहितानन्दः कलंकरहितात्मकः ॥९॥ कलंकरहिताभासः कलंकरहितोदयः ॥ कलंकरहितोद्देशः कलंकरहिताननः ॥ ॥१०॥ कलंकरहितश्रीशः कलंकरहितस्तुतिः ॥ कलंकरहितोत्साहः कलंकरहितप्रियः ११ ॥ कलंकरहिताचारः कलंकरहितेन्द्रियः ॥

सह. १७

कलंकरहिताकारः कलंकरहितोत्सवः ।१२।
कलंकांकितदुष्टघ्नः कलंकांकितधर्म्महा ॥
कलंकांकितकर्मारिः कलंकांकितमार्गहृ
त् ।१३। कलंकांकितदुर्द्दर्शः कलंकांकितदुः
सहः ॥ कलंकांकितदूरस्थः कलंकांकितदू
षणः ॥१४॥ कलहोत्पत्तिसंहर्ता कलहोत्प
त्तिकृद्रिपुः । कलहातीतधामस्थः कलहातीत
नायकः १५ कलहातीततत्त्वज्ञः कलहातीत

वैभवः॥ कलहातीतभावस्थः कलहातीतस
त्तमः १६ कलिकालबलातीतः कलिकालवि
लोपकः ॥ कलिकालैकसंहर्ता कलिकालैक
दूषणः ॥ १७ ॥ कलिकालकुलध्वंसी कलि
कालकुलापहः । कलिकालभयच्छेत्ता कलि
कालमदापहः ॥ १८ ॥ कलिक्लेशविनि
र्मुक्तः कलिक्लेशविनाशनः ॥ कलिग्रस्त
जनत्राता कलिग्रस्तनिजार्तिहा ॥ १९ ॥ क

लिग्रस्तजगन्मित्रः [२३०]कलिग्रस्तजगत्पतिः ॥
[१]कलिग्रस्तजगत्त्राता [२]कलिपाशविनाशनः ॥
२०॥ [३]कलिमुक्तिप्रदाता [४]कः [५]कलिमुक्तकले
वरः ॥ [६]कलिमुक्तमनोवृत्तिः [७]कलिमुक्तमहा
मतिः ॥ २१ ॥ कलिकालमतातीतः [९]कलि
धर्मविलोपकः ॥ [२४०]कलिधर्माधिपध्वंसी [१]कलि
धर्मैकखंडनः ॥२२॥ [२]कलिधर्माधिपालक्ष्यः
[३]कलिकालविकारहा ॥ [४]कलिकर्मकथातीतः

कालिकर्मकथारिपुः ॥ २३ ॥ कलिकष्टैकशमनः कलिकष्टविवर्जितः ॥ कलिघ्नः कलिधर्मघ्नः कलिधर्म्माधिकारिहा ।२४। कर्मवित्कर्मकृत्कर्मी कर्मकांडैकदोहनः।कर्मस्थः कर्मजनकः कर्मीष्टः कर्मसाधनः ॥ २५ ॥ कर्मकर्ता कर्मभर्ता कर्महर्ताच कर्मजित्॥ कर्मजातजगत्त्राताकर्मजातजगत्पतिः २६। कर्मजातजगन्मित्रः कर्मजातजगद्गुरुः । क

र्मभूतभवच्छत्रः कर्मभूतभवार्तिहा॥२७॥
कर्मकांडपरिज्ञाता कर्मकांडप्रवर्त्तकः। कं
र्मकांडपरित्राता कर्मकांडप्रमाणकृत्॥२८।
कर्मकांडविवेकज्ञः कर्म कांडप्रकारकः।कं
र्मकांडविवेकस्थः कर्मकांडैकदोहनः।२९।
कर्मकांडरताभीष्टप्रदाता कर्मतत्परः।कंर्म
बद्धजगत्त्राता कंर्मबद्धजगद्गुरुः।३०।कंर्मबं
धार्तिशमनः कंर्मबंधविमोचनः।कंर्मिष्ठाद्वि

क. कृ. २०

जवर्यस्थः कॅर्मिष्ठद्विजवल्लभः ।३१।कॅर्मिष्ठद्विजजीवात्मा कॅर्मिष्ठद्विजजीवनः।कॅर्मिष्ठद्विजभावज्ञः कॅर्मिष्ठद्विजपालकः ॥ ३२ ॥ कॅर्मिष्ठद्विजजातिस्थः कॅर्मिष्ठद्विजकामदः। कॅर्मिष्ठद्विजसंसेव्यः कॅर्मिष्ठद्विजपापहा ॥ ॥ ३३ ॥ कॅर्मिष्ठद्विजबुद्धिस्थः कॅर्मिष्ठद्विजबोधकः ॥ कॅर्मिष्ठद्विजभीतिघ्नः कॅर्मिष्ठद्विजमुक्तिदः ॥ ३४ ॥ कॅर्मिष्ठद्विजदोषघ्नः कॅ

सह. २०

र्मिष्ठद्विजकामधुक् ॥ कर्मिष्ठद्विजसंपूज्यः कर्मिष्ठद्विजतारकः ॥ ३५ ॥ कर्मिष्ठारिष्टसंहर्ता कर्मिष्ठाभीष्टसिद्धिदः ॥ कर्मिष्ठादृष्टमध्यस्थः कर्मिष्ठादृष्टवर्द्धनः ॥ ३६ ॥ कर्ममूलजगद्धेतुः कर्ममूलनिकंदनः ॥ कर्मबीजपरित्राता कर्मबीजाविवर्द्धनः ॥ ३७ ॥ कर्मद्रुमफलाधीशः कर्मद्रुमफलप्रदः ॥ कस्तूरीद्रवलिप्तांगः कस्तूरीद्रववल्लभः ॥ ३८ ॥ क

स्तूरीसौरभग्राही[४] कस्तूरीमृगवल्लभः।[५]कस्तूरीतिलकानंदी[६] कस्तूरीतिलकाप्रियः ॥३९॥
[७]कस्तूरीतिलकाश्लेषी [८]कस्तूरीतिलकांकितः ॥ [९]कस्तूरीवासनालीनः [३२०]कस्तूरीवासनाप्रियः ॥१४०॥ [१]कस्तूरीवासनारूपः [२]कस्तूरीवासनात्मकः ॥ [३]कस्तूरीवासनांतस्थः [४]कस्तूरीवासनास्पदः ॥ ४१ ॥ [५]कस्तूरीचन्दनग्राही [६]कस्तूरीचन्दनार्चितः ॥ [७]कस्तूरी

चन्दनागारः कस्तूरीचन्दनान्वितः ॥४२॥
[१] कस्तूरीचन्दनाकारः [३३०] कस्तूरीचन्दनासनः
[१] कस्तूरीचर्च्चितोरस्कः [२] कस्तूरीचर्विताननः।
॥ ४३ ॥ [३] कस्तूरीचर्वितश्रीशः [४] कस्तूरीचर्च्चि
तांबरः ॥ [५] कस्तूरीचर्च्चितास्यश्रीः [६] कस्तूरी
चर्च्चितप्रियः ॥ ४४ ॥ [७] कस्तूरीमोदमुदितः
कस्तूरीमोदवर्द्धनः ॥ [९] कस्तूरीमोददीप्तांगः
[३४०] कस्तूरीसुन्दराकृतिः।४५।[१] कस्तूरीमोदरासि

कः कस्तूरीमोदलोलुपः ॥ कस्तूरीपरमानन्दी कस्तूरीपरमेश्वरः ॥ ४६ ॥ कस्तूरीदानसंतुष्टः कस्तूरीदानवल्लभः ॥ कस्तूरीपरमाह्लादः कस्तूरीपुष्टिवर्द्धनः ॥ ४७ ॥ कस्तूरीमुदितात्मा च कस्तूरीमुदिताशयः ॥ कदलीवनमध्यस्थः कदलीवनपालकः ॥ ४८ ॥ कदलीवनसंचारी कदलीवनवल्लभः ॥ कदलीदर्शनानंदी कदलीदर्श

नोत्सुकः ॥ ४९ ॥ कंदलीपल्लवास्वा
दी कंदलीपल्लवाश्रयः ॥ कंदलीफलसंतु
ष्टः कंदलीफलदायकः ॥ १५० ॥ कंद
लीफलसंपुष्टः कंदलीफलभोजनः ॥
कंदलीफलवर्याशी कंदलीफलतोषितः ॥
॥ ५१ ॥ कंदलीफलमाधुर्यवल्लभः कंदली
प्रियः ॥ कंपिध्वजसमायुक्तः कंपिध्वजप
रिस्तुतः ॥ ५२ ॥ कंपिध्वजपरित्राता कं

पिध्वजसमाश्रितः ॥ [1] कंपिध्वजपदंतस्थः [2] कंपिध्वजजयप्रदः ॥ ५३ ॥ [3] कंपिध्वजरथारूढः [4] कंपिध्वजयशःप्रदः ॥ [5] कंपिध्वजैकपापघ्नः [6] कंपिध्वजसुखप्रदः ॥ ५४ ॥ [7] कंपिध्वजारिसंहर्ता [8] कंपिध्वजभयापहः ॥ [9] कंपिध्वजमनोभिज्ञः [380] कंपिध्वजमतिप्रदः ॥ ५५ ॥ [1] कंपिध्वजसुहृन्मित्रः [2] कंपिध्वजसुहृत्सखा ॥ [3] कंपिध्वजांगनाराध्याः [4] कंपिध्वजगतिप्रदः ॥

॥ ५६ ॥ [५]कपिध्वजांगनारिघ्नः [६]कपिध्वजरति
प्रदः ॥ [७]कपिध्वजकुलत्राता [८]कपिध्वजकुला
रिहा ॥ ५७ ॥ [९]कपिध्वजकलाधीशः [३१०]कपि
ध्वजकुलप्रियः ॥ [१]कपीन्द्रसेवितांघ्र्यब्जः
[२]कपीन्द्रस्तुतिवल्लभः ॥ ५८ ॥ [३]कपीन्द्रा
नन्दजनकः [४]कपीन्द्राश्रितविग्रहः ॥ [५]कपीन्द्रा
श्रितपादाब्जः [६]कपीन्द्राश्रितमानसः ।५९।
[७]कपीन्द्राराधिताकारः [८]कपीन्द्राभीष्टसिद्धि

 



दः ॥ कपीन्द्राराातिसंहर्ता [४००] कपीन्द्रातिबल
प्रदः ।६०। [१] कपीन्द्रैकपरित्राता [२] कपीन्द्रैकय
शःप्रदः ।६१। [३] कपीन्द्रानन्दसंपन्नः [४] कपीन्द्रा
नंदवर्द्धनः। [५] कपीन्द्रध्यानगम्यात्मा [६] कपीन्द्र
ज्ञानदायकः ॥ ६२ ॥ [७] कल्याणमंगलाकारः
[८] कल्याणमंगलास्पदः ॥ [९] कल्याणमंगलाधी
शः [४१०] कल्याणमंगलप्रदः ॥६३॥ [१] कल्याणमंग
लागारः [२] कल्याणमंगलात्मकः ॥ [३] कल्याणा

नन्दसपन्नः कल्याणानन्दवर्द्धनः ॥ ६४ ॥
कल्याणानन्दसहितः कल्याणानन्ददाय
कः ॥ ६५ ॥ कल्याणानन्दसंतुष्टः कल्या
णानन्दसंयुतः ॥ कल्याणीरागसंगीतः
कल्याणीरागवल्लभः ॥ ६६ ॥ कल्याणी
रागरसिकः कल्याणीरागकारकः ॥ क
ल्याणीकेलिकुशलः कल्याणीप्रियदर्शनः
॥ ६७ ॥ कल्पशास्त्रपरिज्ञाता कल्पशास्त्रा

र्थदोहनः ॥ कल्पशास्त्रसमुद्धर्ता कल्पशास्त्रपरिस्तुतः ॥ ६८ ॥ कल्पकोटिशतातीतः कल्पकोटिशतोत्तरः ॥ ॥ कल्पकोटिशतज्ञानी कल्पकोटिशतप्रभुः ॥ ६९ ॥ कल्पवृक्षसमाकारः कल्पवृक्षसमप्रभः॥कल्पवृक्षसमोदारः कल्पवृक्षसमास्थितः ७०॥ कल्पवृक्षपरित्राता कल्पवृक्षसमावृतः॥ कल्पवृक्षवनाधीशः कल्पवृक्षवनास्पदः ॥

॥ ७१ ॥ [१]कल्पांतदहनाकारः [२]कल्पांतदहनो
पमः ॥ [३]कल्पांतकालशमनः [४]कल्पांतातीत
विग्रहः ॥ ७२ ॥ [५]कलशोद्भवसंसेव्यः [६]कल
शोद्भववल्लभः ॥ [७]कलशोद्भवभीतिघ्नः [८]कल
शोद्भवसिद्धिदः ॥ ७३ ॥ [९]कपिलः
[४८०]कपिलाकारः [१]कपिलप्रियदर्शनः ॥ [२]कर्द
मात्मजभावस्थः [३]कर्दमाप्रियकारकः ॥
७४ ॥ [४]कन्यकानीकवरदः [५]कन्यकानीकव

ल्लभः ॥ कन्यकानीकसंस्तुत्यः कन्यकानी
कनायकः ॥ ७५ ॥ कन्यादानप्रदत्राता क
न्यादानप्रदप्रियः ॥ कन्यादानप्रभावज्ञः क
न्यादानप्रदायकः ॥ ७६ ॥ कश्यपात्मज
भावस्थः कश्यपात्मजभास्करः ॥ कश्यपा
त्मजशत्रुघ्नः कश्यपात्मजपालकः ॥७७॥
कश्यपात्मजमध्यस्थः कश्यपात्मजवल्ल
भः ॥ कश्यपात्मजभीतिघ्नः कश्यपात्मज

दुर्लभः ॥ ७८ ॥ [४७१] कश्यपात्मजभावस्थः क
श्यपात्मजभाववित् ॥ [२] कश्यपोद्भवदैत्या
रिः [३] कश्यपोद्भवदेवराट् ॥ ७९ ॥ [४] कश्यपा
नन्दजनकः कश्यपानन्दवर्द्धनः ॥ [६] कश्यपा
रिष्टसंहर्ता [७] कश्यपाभीष्टसिद्धिदः ॥ ८० ॥
कर्तृकर्मक्रियातीतः [९] कर्तृकर्मक्रियान्वयः ॥
[४८०] कर्तृकर्मक्रियालक्ष्यः [१] कर्तृकर्मक्रियास्पदः।
॥ ८१ ॥ [२] कर्तृकर्मक्रियाधीशः [३] कर्तृकर्मक्रि

यात्मकः ॥ कर्तृकर्मक्रियाभासः कर्तृकर्म
क्रियाप्रदः ॥८२॥ कृपानाथः कृपासिंधुः कृ
पाधीशः कृपाकरः ॥ कृपासागरमध्यस्थः
कृपापात्रःकृपानिधिः ॥ ८३ ॥ कृपापात्रैक
वरदः कृपापात्रभयापहः ॥ कृपाकटाक्षपा
पघ्नः कृतकृत्यः कृतांतकः ॥ ८४ ॥ कदम्ब
वनमध्यस्थः कदम्बकुसुमप्रियः ॥ कदंबव
नसंचारी कदंबवनवल्लभः ॥ ८५ ॥ कर्पूरा

मोदमुदितः [३]कर्पूरामोदवल्लभः ॥ [४]कर्पूरावा
सनासक्तः [५]कर्पूरागरुचर्चितः ॥ ८६ ॥ [६]करु
णारससंपूर्णः [७]करुणारसवर्द्धनः ॥ [८]करुणाक
रविख्यातः [९]करुणाकरसागरः ॥ ८७ ॥
[५१०]कालात्मा [१]कालजनकः [२]कालाग्निः [३]कालसं
ज्ञकः ॥ [४]कालः [५]कालकलातीतः [६]कालस्थः
[७]कालभैरवः ॥ ८८ ॥ [८]कालज्ञः [९]कालसंहर्ता
[५२०]कालचक्रप्रवर्तकः ॥ [१]कालरूपः [२]कालनाथः

क. कु.

२८

कालकृत्कालिकाप्रियः ॥ ८९ ॥ कालैकव
रदः कालः कारणः कालरूपभाक् ॥ काल
मायाकलातीतः कालमायाप्रवर्तकः ९० ॥
कालमायाविनिर्मुक्तः कालमायाबलापहः ।
कालत्रयगतिज्ञाता कालत्रयपराक्रमः ॥
॥९१॥कालज्ञानकलातीतः कालज्ञानप्रदा
यकः ॥ कालज्ञः कालरहितः काला
ननसमप्रभः ॥ ९२ ॥ कालचक्रैक

सह.

२८

हेतुस्थः का[१]लरात्रिदुरत्ययः ॥ का[२]लपाश विनिर्मुक्तः का[३]लपाशविमोचनः ॥ ९३ ॥ का[४]लव्यालैकदलनः का[५]लव्यालभयापहः॥ का[६]लकर्मकलातीतः का[७]लकर्मकलाश्रयः ॥ ॥ ९४ ॥ का[८]लकर्मकलाधीशः का[९]लकर्म कलात्मकः ॥ का[१०]लव्यालपरिग्रस्तनिज भक्तैकमोचनः ॥ ९५ ॥ का[१]शिराजाशि रश्छेत्ता का[२]शीशप्रियकारकः ॥ का[३]शीस्था

तिंहरः काशीमध्यस्थः काशिकाप्रियः ॥
॥ ९६ ॥ काशीवासिजनानंदी काशीवासि
जनप्रियः ॥ काशीवासिजनत्राता काशीवा
सिजनस्तुतः ॥ ९७ ॥ काशीवासिविकार
घ्नः काशीवासिविमोचनः ॥ काशीवासि
जनोद्धर्ता काशीवासकुलप्रदः ॥ ९८ ॥
काशीवास्याश्रितांघ्र्यब्जः काशीवासिसु
खप्रदः ॥ काशीस्थाभीष्टफलदः काशीस्था

रिष्टनाशनः ॥९९॥ कांशीस्थद्विजसंसेव्यः कांशीस्थद्विजपालकः ॥ कांशीस्थद्विजसद्बुद्धिप्रदाता कांशिकाश्रयः॥२००॥ कांतीशः कांतिदः कांतः कान्ताराप्रियदर्शनः ॥ कांतिमान्कांतिजनकः कान्तिस्थः कांतिवर्द्धनः ॥ १ ॥ कांलागरुसुगंधाढ्यः कांलागरु विलेपनः ॥ कांलागरुसुगंधज्ञः कांलागरु सुगंधकृत् ॥ २ ॥ कांपटच्चपटलच्छेत्ता कां

यस्थः ^६^कायवर्द्धनः ॥ ^७^कायभाग्भयभीतिघ्नः ^८^कायरोगापहारकः ॥ ३ ॥ ^९^कार्यकारणकर्तृस्थः ^१००^कार्यकारणकारकः ॥ ^१^कार्यकारणसंपन्नः ^२^कार्यकारणसिद्धिदः ॥ ४ ॥ ^३^काव्यामृतरसास्वादी ^४^काव्यामृतरसात्मकः ॥ ^५^काव्यामृतरसाभिज्ञः ^६^काव्यामृतरसप्रियः ॥ ५ ॥ ^७^कादिवर्णैकजनकः ^८^कादिवर्णप्रवर्तकः ॥ ^९^कादिवर्णविवेकज्ञः

[६००]कांदिवर्णविनोदवान् ॥ ६ ॥ [१]कांदिहा
दिमनुज्ञाता [२]कांदिहादिमनुप्रियः ॥ [३]कां
दिहादिमनूद्धारकारकः [४]कांदिसंज्ञकः ॥
॥ ७ ॥ [५]कालुष्यरहिताकारः [६]कालुष्यैकवि
नाशनः ॥ [७]कारागृहविमुक्तात्मा [८]कारागृह
विमोचनः ॥ ८ ॥ [९]कामात्मा [६१०]कामदः
[१]कामी [२]कामेशः [३]कामपूरकः ॥ [४]कामह
[५]त्कामजनकः [६]कामी [७]कामप्रदायकः ॥

क. कृ. ॥ ९ ॥ कामपालः कामभर्ता कामकेलिक सह.

३१ लानिधिः ॥ कामकेलिकलासक्तः काम

केलिकलाप्रियः ॥ २१० ॥ कामबीजैकव

रदः कामबीजसमन्वितः ॥ कामाजित्का

मवरदः कामक्रीडातिलालसः ॥ ११ ॥ का

मार्तिशमनः कामालंकृतः कामसंस्तुतः ॥

कामिनीकामजनकः कामिनीकामवर्द्धनः ३१

॥ १२ ॥ कामिनीकामरसिकः कामिनी

कामपूरकः ॥ कामिनीमानदः कामकला
कौतूहलप्रियः॥ १३॥ कामिनीप्रेमजनकः
कामिनीप्रेमवर्द्धनः ॥ कामिनीहावभावज्ञः
कामिनीप्रीतिवर्द्धनः।१४।कामिनीरूपरासि
कः कामिनीरूपभूषणः॥ कामिनीमानसो
ल्लासी कामिनीमानसास्पदः ॥ १५॥ का
मिभक्तजनत्राता कामिभक्तजनप्रियः ॥
कामेश्वरः कामदेवः कामबीजैकजीवनः॥

क. कृ.
३२

॥ १६ ॥ [९]कालिंदीविषसंहर्ता [६५०]कालिन्दीप्राणजीवनः ॥ [१]कालिन्दीहृदयानन्दी [२]कालिंदीनीरवल्लभः ॥ १७ ॥ [३]कालिन्दीकेलिकुशलः [४]कालिन्दीप्रीतिवर्द्धनः ॥ [५]कालिन्दीकेलिरसिकः [६]कालिन्दीकेलिलालसः॥१८॥ [७]कालिन्दीनीरसंखेलद्गोपीयूथसमावृतः ॥ [८]कालिंदीनीरमध्यस्थः [९]कालिंदीनीरकेलिकृत् ॥ १९ ॥ [६६०]कालिंदीरमणासक्तः कालिना

सह.
३२

गमदापहः॥ कामधेनुपरित्राता कामधेनु
समावृतः ॥ २० ॥ काञ्चनाद्रिसमानश्रीः
कांचनाद्रिनिवासकृत् ॥ कांचनाभूषणास
क्तः कांचनैकाविवर्द्धनः॥२१॥कांचनाभाश्रि
यासक्तः कांचनाभाश्रियाश्रितः ॥ कार्ति
केयैकवरदः कार्तवीर्यमदापहः ॥ २२ ॥
किशोरीनायिकासक्तः किशोरीनायिकाप्रि
यः ॥ किशोरीकेलिकुशलः किशोरीप्राण

जीवन:॥२३॥ किशोरीवल्लभाकार: किशो
रीप्राणवल्लभ:॥किशोरीप्रीतिजनक: किशो
रीप्रियदर्शन: ॥२४॥ किशोरीकेलिसंसक्त:
किशोरीकेलिवल्लभ:।किशोरीकेलिसंयुक्त:
किशोरीकेलिलोलुप: ॥ २५ ॥ किशोरीह
दयानन्दी किशोरीहृदयास्पद: ॥ किशोरी
श: किशोरात्मा किशोर: किंशुकाकृति: ॥
॥ २६ ॥ किंशुकाभरणालक्ष्य: किंशुकाभ

रणान्वितः ॥ कीर्तिमान्कीर्तिजनकः
कीर्तनीयपराक्रमः ॥ २७ ॥ कीर्तनीयय
शोराशिः कीर्तिस्थः कीर्तनाप्रियः ॥ कीर्ति
श्रीमतिदः कीशः कीर्तिज्ञः कीर्तिवर्द्धनः ॥
॥ २८ ॥ क्रियात्मकः क्रियाधारः क्रिया
भासः क्रियास्पदः। कीलालामलचिद्वृत्तिः की
लालाश्रयकारणः ॥ २९ ॥ कुलधर्माधिपा
धीशः कुलधर्माधिपप्रियः ॥ कुलधर्मपरि

क. कृ. जीवनः ॥२३॥ किंशोरीवल्लभाकारः किंशो सह.

३२ रीप्राणवल्लभः॥ किंशोरीप्रीतिजनकः किंशो

रीप्रियदर्शनः ॥२४॥ किंशोरीकेलिसंसक्तः

किंशोरीकेलिवल्लभः। किंशोरीकेलिसंयुक्तः

किंशोरीकेलिलोलुपः ॥ २५ ॥ किंशोरीहृ

दयानन्दी किंशोरीहृदयास्पदः ॥ किंशोरी

शः किंशोरात्मा किंशोरः किंशुकाकृतिः ॥ ३३

॥ २६ ॥ किंशुकाभरणालक्ष्यः किंशुकाभ

रणान्वितः ॥ [2]कीर्तिमान्कीर्तिजनकः
[3]कीर्तनीयपराक्रमः ॥ २७ ॥ [4]कीर्तनीयय
शोराशिः [5]कीर्तिस्थः [6]कीर्तनाप्रियः ॥ [7]कीर्ति
श्रीमतिदः [8]कीशः [9]कीर्तिज्ञः [10]कीर्तिवर्द्धनः ॥
॥ २८ ॥ [1]क्रियात्मकः [2]क्रियाधारः [3]क्रिया
भासः [4]क्रियास्पदः। [5]कीलालामलचिद्वृत्तिः [6]की
लालाश्रयकारणः ॥ २९ ॥ [7]कुलधर्माधिपा
धीशः कुलधर्माधिपप्रियः ॥ [1]कुलधर्मपारि

त्राता कुलधर्मपतिस्तुतः ॥ ३० ॥ कुलधर्म
पदाधारः कुलधर्मपदाश्रयः ॥ कुलधर्मप
तिप्राणः कुलधर्मपतिप्रियः ॥ ३१ ॥ कुल
धर्मपतित्राता कुलधर्मैकरक्षकः ॥ कुलध
र्मसमासक्तः कुलधर्मैकदोहनः ॥ ३२ ॥
कुलधर्मसमुद्धर्ता कुलधर्मप्रभाववित् ॥ कु
लधर्मसमाराध्यः कुलधर्मधुरंधरः ॥
॥ ३३ ॥ कुलमार्गरतासक्तः कुलमा

र्गरताश्रयः ॥ कुलमार्गसमासीनः कुलमा
र्गसमुत्सुकः ॥ ३४ ॥ कुलधर्माधिकारस्थः
कुलधर्मविवर्द्धनः ॥ कुलाचारविचारज्ञः
कुलाचारसमाश्रितः ॥ ३५ ॥ कुलाचारस
मायुक्तः कुलाचारसुखप्रदः ॥ कुलाचारा
तिचतुरः कुलाचारातिवल्लभः ॥ ३६ ॥
कुलाचारपावित्राङ्गः कुलाचारप्रमाणकृत् ॥
कुलवृक्षैकजनकः कुलवृक्षाविवर्द्धनः ॥ ३७ ॥

कुलवृक्षपरित्राता कुलवृक्षफलप्रदः ॥ कुलवृक्षफलाधीशः कुलवृक्षफलाशनः ॥३८॥ कुलमार्गकलाभिज्ञः कुलमार्गकलान्वितः॥ कुकर्मनिरतातीतः कुकर्मानिरतांतकः ॥३९॥ कुकर्ममार्गरहितः कुकर्मैकनिषूदनः ॥ कुकर्मराहिताधीशः कुकर्मराहितात्मकः ॥ ४० ॥ कुकर्मरहिताकारः कुकर्मरहितास्पदः॥ कुकर्मराहिताचारः कुकर्म

रहितोत्सवः ॥ ४१ ॥ कुकर्मरहितोद्देशः कुकर्मरहितप्रियः॥कुकर्मरहितांतःस्थः कुकर्मरहितेश्वरः ॥ ४२ ॥ कुकर्मरहितस्त्रीशः कुकर्मरहितप्रजः ॥ कुकर्मोद्भवपापघ्नः कुकर्मोद्भवदुःखहा ॥ ४३ ॥ कुतर्करहिताधीशः कुतर्करहिताकृतिः ॥ कूटस्थसाक्षी कूटात्मा कूटस्थाक्षरनायकः ॥४४॥ कूटस्थाक्षरसंसेव्यः कूटस्थाक्षरकारणः ॥

क. कृ. ३६

कुबेरबंधुः[७७०] कुशलः[१] कुंभकर्णविनाशनः[२] ॥ ॥ ४५ ॥ कूर्माकृतिधरः[३] कूर्मः[४] कूर्मस्थावनिपालकः[५] ॥ कुमारीवरदः[६] कुस्थः[७] कुमारीगणसेवितः[८] ॥ ४६ ॥ कुशस्थलीसमासीनः[९] कुशदैत्यविनाशनः[७८०] ॥ केशवः[१] क्लेशसंहर्ता[२] केशिदैत्यविनाशनः[३] ॥ ४७ ॥ क्लेशहीनमनोवृत्तिः[४] क्लेशहीनपरिग्रहः[५] ॥ क्लेशातीतपदाधीशः[६] क्लेशातीतजनप्रियः[७] ॥४८॥ क्लेशातीत



३६

शुभाकारः क्लेशातीतसुखास्पदः ॥ क्लेशा
तीतसमाजस्थः क्लेशातीतमहामतिः॥४९॥
॥ क्लेशातीतजनत्राता क्लेशहीनजनेश्वरः ॥
क्लेशहीनस्वधर्मस्थः क्लेशहीनविमुक्तिदः ॥
५०॥क्लेशहीननराधीशःक्लेशहीननरोत्तमः॥
क्लेशातिरिक्तसदनः क्लेशमूलनिकंदनः ॥
५१ ॥ क्लेशातिरिक्तभावस्थः क्लेशहीनैक
वल्लभः॥क्लेशहीनपदांतस्थःक्लेशहीनजनार्द

नः ॥ ५२ ॥ केसरांकितभालश्रीः के सरांकितवल्लभः केसरालिप्तहृदयः केस रालिप्तसद्भुजः ॥ ५३ ॥ केसरांकितवास श्रीः केसरांकितविग्रहः ॥ केसराकृतिगो पीशः केसरामोदवल्लभः ॥ ५४ ॥ केसरा मोदमधुपः केसरामोदसुंदरः ॥ केसरा मोदमुदितःकेसरामोदवर्द्धनः॥५५॥ केसरा र्चितभालश्रीः केसरार्चितविग्रहः ॥ केसरा

र्चितपादाब्जः केसरार्चितकुण्डलः ॥ ५६॥
केसरामोदसंपन्नः केसरामोदलोलुपः॥ केत
कीकुसुमासक्तः केतकीकुसुमप्रियः॥५७॥
केतकीकुसुमाधीशः केतकीकुसुमांकितः॥
केतकीकुसुमामोदवर्द्धनः केतकीप्रियः ॥
॥ ५८ ॥ केतकीशोभिताकारः केतकी
शोभिताम्बरः॥ केतकीकुसुमामोदवल्लभः
केतकीश्वरः॥५९॥केतकीसौरभानन्दीकेत

कीसौरभाप्रियः॥ केयूरालंकृतभुजः केयूराल-
ंकृतात्मकः॥६०॥ केयूरालंकृतश्रीशः केयूर-
प्रियदर्शनः॥ केदारेश्वरसंयुक्तः केदारेश्वरव-
ल्लभः ॥ ६१ ॥ केदारेश्वरपार्श्वस्थः केदारे-
श्वरभक्तपः ॥ केदारकल्पसारज्ञः केदार-
स्थलवासकृत् ॥ ६२ ॥ केदाराश्रितभी-
तिघ्नः केदाराश्रितमुक्तिदः ॥ केदारावासि-
वरदः केदाराश्रितदुःखहा ॥ ६३ ॥ केदार

पोषकः केशः केदारान्नविवर्द्धनः ॥
केदारापुष्टि जनकः केदारप्रियदर्शनः ॥
॥ ६४ ॥ कैलासेशसमाजस्थः कैलासेश
प्रियंकरः ॥ कैलासेशसमायुक्तः कैलासेश
प्रभाववित् ॥ ६५ ॥ कैलासाधीशशत्रुघ्नः
कैलासपतितोषकः ॥ कैलासाधीशसाहितः
कैलासाधीशवल्लभः ॥ ६६ ॥ कैवल्यमुक्ति
जनकः कैवल्यपदवीश्वरः ॥ कैवल्यपदवी

 

त्राता कैवल्यपदवीप्रियः ॥ ६७ ॥ कैवल्यज्ञानसंपन्नः कैवल्यज्ञानसाधनः ॥ कैवल्यज्ञानगम्यात्मा कैवल्यज्ञानदायकः ॥ ६८ ॥ कैवल्यज्ञानसंसिद्धः कैवल्यज्ञानदीपकः॥ कैवल्यज्ञानविख्यातःकैवल्यैकप्रदायकः॥६९॥क्रोधलोभभयातीतःक्रोधलोभविनाशनः॥क्रोधारिः क्रोधहीनात्मा क्रोधहीनजनप्रियः ॥७०॥ क्रोधहीनजनाधीशः

क्रोधहीनप्रजेश्वरः ॥ कोपतापोपशमनः
कोपहीनवरप्रदः ॥ ७१ ॥ कोपहीननरत्रा
ता कोपहीनजनाधिपः ॥ कोपहीननरांतः
स्थः कोपहीनप्रजापतिः ॥ ७२ ॥ कोपही
नाप्रियासक्तः ॥ कोपहीनजनार्तिहा ॥ को
पहीनपदाधीशः कोपहीनपदप्रदः ॥ ७३ ॥
कोपहीननरस्वामी कोपहीनस्वरूपधृक् ॥
कोकिलालापसंगीतः कोकिलालापवल्लभः

क. कृ. ॥ ७४ ॥ कोकिलालापलीनात्मा कोकिला सह.

४० लापकारकः ॥ कोकिलालापकांतेशः

कोकिलालापभावावित् ॥ ७५ ॥ कोकिला

गानरसिकः कोकिलास्वरवल्लभः ॥ कोटिसू

र्यसमानश्रीः कोटिचन्द्रामृतात्मकः ॥

॥ ७६ ॥ कोटिदानवसंहर्ता कोटिकंदर्पदर्प

हा ॥ कोटिदेवेन्द्रसंसेव्यः कोटिब्रह्मार्चिता ४०

कृतिः ॥ ७७ ॥ कोटिब्रह्माण्डमध्यस्थः को

टिविद्युत्समद्युतिः ॥ को[८]ट्यश्वमेधपापघ्नः को[९]टिकामेश्वराकृतिः ॥७८॥ को[११०]टिमेघसमोदारः को[१]टिवह्निसुदुःसहः ॥ कोटिपा[२]थोधिगंभीरः को[३]टिमेरुसमास्थिरः ॥ ७९ ॥ को[४]टिगोपीजनाधीशः को[५]टिगोपांगनावृतः ॥ को[६]टिदैत्येशदर्पघ्नः को[७]टिरुद्रपराक्रमः ॥ ८० ॥ को[८]टिभक्तार्तिशमनः को[९]टिदुष्टविमर्दनः ॥ को[१२०]टिभक्तजनो

क. कृ. ४१

द्धर्ता कोटियज्ञफलप्रदः ॥ ८१ ॥ कोटिदेवर्षिसंसेव्यः कोटिब्रह्मर्षिमुक्तिदः ॥ कोटिराजर्षिसंस्तुत्यः कोटिब्रह्मांडमंडनः ॥ ८२ ॥ कोट्याकाशप्रकाशात्मा कोटिवायुमहाबलः ॥ कोटितेजोमयाकारः कोटिभूमिसमक्षमी ॥ ८३ ॥ कोटिनीरसमस्वच्छः कोटिदिग्ज्ञानदायकः ॥ कोटिब्रह्मांडजनकः कोटिब्रह्मांडपालकः ॥८४॥

सह. ४१

कोटिब्रह्मांडसंहर्ता कोटिब्रह्मांडबोधकः ॥
कोटिवाक्पतिवाचालःकोटिशुक्रकवीश्वरः।
॥ ८५ ॥ कोटिद्विजसमाचारः कोटिहेर
म्बविघ्नहा ॥ कोटिमानसहंसात्मा कोटि
मानससंस्थितः ॥ ॥ ८६ ॥ कोटिच्छल
करारातिः कोटिदांभिकनाशनः॥ कोटि
शून्यपथच्छेत्ता कोटिपाखंडखंडनः॥८७॥
कोटिशेषधराधारः कोटिकालप्रबोधकः ॥

क. क्रृ. ४२

कोटिवेदांतसंवेद्यः कोटिसिद्धांतनिश्चयः ॥
॥ ८८ ॥ कोटियोगीश्वराधीशः कोटियोगै
कसिद्धिदः॥ कोटिधामाधिपाधीशः कोटि
लोकैकपालकः ॥ ८९ ॥ कोटियज्ञैकभो
क्ता च कोटियज्ञफलप्रदः ॥ कोटिभक्तहृ
दंतस्थः कोटिभक्ताभयप्रदः ॥ ९० ॥ को
टिजन्मार्तिशमनः कोटिजन्माघनाशनः ॥
कोटिजन्मांतरज्ञानप्रदाता कोटिभक्तपः॥

सह. ४२

॥ ९१ ॥ कोटिशक्तिसमायुक्तः कोटि
चैतन्यबोधकः ॥ कोटिचक्रावृताकारः
कोटिचक्रप्रवर्तकः ॥ ९२ ॥ कोटिचक्रार्च
नत्राता कोटिवीरावलीवृतः ॥ कोटितीर्थ
जलांतस्थः कोटितीर्थफलप्रदः ॥ ९३ ॥
कौमलामलचिद्वृत्तिःकौमलामलमानसः॥
कौस्तुभोद्भासितोरस्कः कौस्तुभोद्भासिता
कृतिः ॥ ९४ ॥ कौरवानीकसंहर्ता कौरवा

क. कृ.

४३

र्णवकुंभभूः ॥ [६]कौंतेयाश्रितपादाब्जः [७]कौन्ते याभयदायकः ॥ ९५ ॥ [८]कौन्तेयारातिसं हर्ता [९]कौन्तेयप्रतिपालकः ॥ [१०]कौन्ते यानन्दजनकः [१]कौन्तेयप्राणजीवनः ॥ ॥ ९६ ॥ [२]कौन्तेयाचलभावज्ञः [३]कौन्ते याचलमुक्तिदः ॥ [४]कौमुदीमुदिताकारः [५]कौमुदीमुदिताननः ॥९७॥ [६]कौमुदीमुदित प्राणः [७]कौमुदीमुदिताशयः॥[८]कौमुदीमोदम

सह.

४३

दितः [९]कौमुदीमोदवल्लभः ॥९८॥ [९९०]कौमुदी
मोदमधुपः[१]कौमुदीमोदवर्धनः ॥ [२]कौमु
दीमोदमानात्मा [३]कौमुदीमोदसुंदरः ९९॥
[४]कौमुदीदर्शनानन्दी [५]कौमुदीदर्शनोत्सुकः
॥ [६]कौशल्यापुत्रभावस्थः [७]कौशल्यानंदव
र्द्धनः ॥ १०० ॥ कंसारिः [९]कंसहीनात्मा
[१००८]कंसपक्षनिकंदनः ॥ [१]कंकालः [२]कंकवरदः
[३]कंटकक्षयकारकः ॥ १ ॥ [४]कंन्दर्पदर्पशम

न: कंदर्पाभिमनोहरः ॥ कंदर्पकामनाहा
नः कँदर्पज्वरनाशनः ॥ २ ॥ कँन्दर्पज्वर
नाशन ॐ नम इति ॥ इति श्रीसर्वसौभाग्य
वर्धनंश्रीपातिप्रियम् ॥ नाम्नामक्षरकादीनां
सहस्रं परिकीर्तितम् ॥३॥ सर्वापराधशमनं

* 'कङ्काल' इत्यारभ्य 'कंदर्पज्वरनाशनः' इत्यन्ताः सप्त शब्दाः सहस्राधिकाःसन्ति। तथा च 'कन्दर्पज्वरनाशनः' इति पदमावर्त्य पठनीयम्। एवं सत्यष्टोत्तरसहस्रनामस्तोत्रं संपूर्णं भवतीति ध्येयम्।

रहस्यं श्रुतिगोचरम् ॥ कलिकालैकदमनं क्रूरशत्रुनिकंदनम् ॥ ४ ॥ क्रूरपापस मूहघ्नं क्रूरकर्मविनाशनम् ॥ क्रूरासुरौघसं हारकारकं क्लेशनाशनम् ॥५॥ कुमार्गदल नं कष्टहरणं कल्मषापहम् ॥ कुबुद्धिशम नं क्रोधकंदनं कांतिवर्द्धनम् ॥ ६ ॥ कुवि द्यादमनं काममर्दनं कीर्तिदायकम् ॥ कु तर्कनाशनं कांतं कुपथार्णवशोषणम् ॥७॥

कोटिजन्मार्जितारिष्टहरं कालभयापहम्॥ कोटिजन्मार्जिताज्ञाननाशनैकदिवाकरम् ॥ ८ ॥ कापटच्यपटलध्वंसिकार्पण्यैकहुताशनम् ॥ कालुष्यभावशमनं कीर्तिश्रीमतिदं सताम् ॥९॥ कोपोपतापशमनं कंसारिस्मृतिदायकम् ॥ कुलाचाराविचारस्थं कुलधर्मप्रवर्तकम् ॥१०॥ कुलधर्मरताभीष्टसिद्धिदं कुलदीपकम् ॥ कत्सामार्ग

निराकर्तृं कुपथाचारवर्जितम् ॥ ११ ॥
कल्याणमंगलागारं कल्पवृक्षसमं सताम् ॥
कौटिल्यभावशमनं काशीवासफलप्रदम् ॥
॥ १२ ॥ अतिगुह्यतरं पुंसां भोगमोक्षैक
साधनम् ॥ अत्यंतस्नेहभावेन युष्मदग्रे
प्रकाशितम् ॥ १३ ॥ न वक्तव्यं न वक्त
व्यं न वक्तव्यं कदाचन ॥ पाप्यग्रे कुटिला
ग्रे च राग्यग्रे पिशुनाय वै ॥ १४ ॥ द्रोह्यग्रे

मलिनाग्रे च कपटच्यग्रे विशेषतः ॥ लंप
टाग्रेऽभिमान्यग्रे काम्यते क्रोधिने तथा ॥
॥ १५ ॥ लोभ्यग्रे तस्कराग्रे च गर्वाहंकार
भाजिने ॥ संसारासक्तचित्ताग्रे वाद्यग्रे घा
तिनेऽपि वा ॥ १६ ॥ मताभिमानिने गो-
प्यं मदीयं स्तोत्रमुत्तमम् ॥ वाच्यं शां
ताय भक्ताय निर्मलाय दयालवे ॥ १७ ॥
संतोषिणे सुशीलाय सुपात्राय द्विजातये॥

विवेकिने ज्ञानिने च मद्भक्ताय विशेषतः
॥ १८ ॥ य इदं शृणते नित्यं पठतेहर्निशं
जनः ॥ माहत्म्यं तस्य पुण्यस्य मया
वक्तुं न शक्यते ॥ १९ ॥ एकवारमिदं
स्तोत्रं यः शृणोति नरोत्तमः ॥ भोगमोक्ष
प्रधानः स भविष्यति न संशयः ॥ २० ॥
किं पुनः पठनादस्य सर्वसिद्धिःकरेस्थिता ॥
भोगार्थी लभते भोगान्योगार्थी योगसाध

नाम् ॥२१॥ कामार्थी लभते कामान्प्रजार्थी लभते प्रजाम् ॥ विद्यार्थी लभते विद्यां मोक्षार्थी मोक्षमव्ययम् ॥ २२ ॥ द्रव्यार्थी लभते द्रव्यं प्रियार्थी लभते प्रियम् ॥ मानार्थी लभते मानं राज्यार्थी राज्यमुत्तमम् ॥ २३ ॥ ज्ञानार्थी लभते ज्ञानं सुखार्थी लभते सुखम् ॥ कीर्त्यर्थी लभते कीर्तिं ब्रह्मार्थी ब्रह्म निर्गुणम् ॥ २४ ॥

पुष्ट्यर्थी लभते पुष्टिं तुष्ट्यर्थी तुष्टिमात्म
नि ॥ निरीहो लभते नूनं मत्पदं देवदुर्लभम् ॥ २५ ॥ किं दानैः किं व्रतैस्तीर्थैर्यज्ञयागादिभिस्तथा ॥ अस्य श्रवणमात्रेण सर्वयज्ञफलं लभेत् ॥ २६ ॥ नातःपरतरं ज्ञानं नातःपरतरं तपः॥नातःपरतरं ध्यानं नातः परतरोपजः ॥ २७ ॥ नातःपरतरा सिद्धिर्नातःपरतरो मखः ॥ नातःपरतरं

द्रव्यं नातःपरतरा क्रिया ॥ २८॥ य इदं पठते भक्त्या शृणुयाद्वा समाहितः ॥ स ज्ञानी स तपस्वी च स ध्यानी जयतत्परः॥२९॥ स सिद्धो भाग्यवाञ्श्रीमान् क्रियावान्बुद्धिमानपि ॥ जितं तेन जगत्सर्वं येनेदं पठितं श्रुतम् ॥ ३० ॥ किं पुनर्भक्तिभावेन भोगमोक्षप्रदं द्रुतम् ॥ कोटिजन्मार्जितैः पुण्यैर्लभ्यते भाग्यतो यदा ॥३१॥ तदा भाग्यो

दयः पुंसां नात्र कार्या विचारणा ॥ सारा
त्सारतरं शास्त्रं तत्रापि ज्ञानदायकः॥३२॥
ज्ञानाद्ध्यानं परं श्रेष्ठं तत्रापि लयता
यथा ॥ तथैवेदं महास्तोत्रं विना मत्कृपया
किल ॥ ३३ ॥ दुर्लभं त्रिषु लोकेषु सर्व
सिद्धिप्रदं सताम् ॥ यथा भक्तिस्त्रिलोकेषु
दुर्लभा मम देहिनाम् ॥ ३४ ॥ तथैवेदं
महास्तोत्रं सद्यः सायुज्यदायकम् ॥

 

सर्वापराधशमनं लोके कल्पद्रुमप्रभम् ॥ ॥ ३५ ॥ यथा सुदर्शनं लोके दुष्टदैत्य निबर्हणम् ॥ तथैवेदं परं स्तोत्रं कामादिक भयापहम् ॥ ३६ ॥ अस्यैकावर्तनात्पापं नश्यत्याजन्मसंचितम् ॥ दशावर्तनतः पुंसां शतजन्मांतरार्जितम् ॥ ३७ ॥ शतावर्त नमात्रेण देवरूपो भवेन्नरः ॥ आवर्तनसह स्रैश्च मद्गतिं लभतेऽचलाम् ॥ ३८ ॥ लक्ष

तो मम सायुज्यं दशलक्षात्स्वयं हरिः ॥
तस्मान्नैव प्रदातव्यं मदीयं स्तोत्रमुत्तमम् ॥
॥ ३९ ॥ पुत्रकामोऽयुतान्पाठान्कारयित्वा
ममालये ॥ सहस्रनामभिर्दिव्यैर्जुहुयाद्घृ
तपायसैः ॥ ४० ॥ शर्करामधुसंयुक्तैर्बिल्वी
दलसमन्वितैः ॥ ब्राह्मणान्भोजयेद्भक्त्या
नामसंख्यामितानिह ॥ ४१ ॥ राज्यका
मोऽयुतान्नित्यं पठेद्वा पाठयेद्द्विजान् ॥ शि

वालये सहस्त्रैश्च होमयेदाज्यपायसैः ॥ ॥ ४२ ॥ ब्राह्मणान्भोजयेन्नूनमयुतैकं यथाविधि ॥ दक्षिणां दापयेच्छक्त्या वित्त शाठ्यं न कारयेत्॥४३॥सहस्त्रमेकं कन्यार्थी पठेद्वा पाठयेत्किल॥देव्यालये तथा नित्यं धनकामोपि पाठयेत् ॥ ४४ ॥ कीर्तिकामोऽयुतं भक्त्या पठेद्वृंदावने सदा ॥ जय कामो हि दुर्गायां शत्रुसंहारकारकः ॥ आ

युःकामो नदीतीरे ज्ञानार्थी पर्वतोपरि ॥
४५ ॥ मोक्षार्थी भक्तिभावेन मंदिरे मम
सन्निधौ ॥ पाठसंख्यान्द्विजान्भोज्यान्पा
यसैः शर्कराप्लुतैः ॥ ४६ ॥ जुहुयाद्घृत
धाराभिर्मम प्रीतिविवर्द्धनैः ॥ सर्वकाम
प्रदं नाम्नां सहस्रं मम दुर्लभम् ॥ ४७ ॥
कामनारहितानां च मुक्तिदं भवसागरात्॥
इदं सहस्रनामाख्यं स्तोत्रमानंदवर्द्धनम् ॥

॥ ४८ ॥ सर्वापराधशमनं पठितव्यमहर्निशम् ॥ अन्यथा नगतिर्नूनं त्रिषु लोकेषु कुत्रचित् ॥ ४९ ॥ वैष्णवानां विशेषेण वैष्णवामामकाजनाः॥ दुर्लभं दुष्टजीवानां मदीयं स्तोत्रमद्भुतम् ॥ ५० ॥ लोकेस्मिन्दुर्लभोगोप्यो मुक्तिमार्गोमनीषिणाम् ॥ सुलभो मम भक्तानां स्तोत्रेणानेन निश्चितम् ॥ ५१ ॥ तावद्गर्जंति पापानि

तावद्गर्जंति शत्रवः ॥ तावद्गर्जंति दारिद्र्यं यावत्स्तोत्रं न लभ्यते ॥ ५२ ॥ किमत्र बहुनोक्तेन त्वदग्रे गोपिका मया ॥ मम प्राणाधिकं स्तोत्रं सदानन्दविवर्द्धनम् ॥ ५३॥अत्यन्तस्नेहभावेन त्वदीयेन व्रजांगनाः॥ मया प्रकाशितं स्तोत्रं त्वद्भक्त्याहं वशीकृतः ॥ ५४ ॥ एवमुक्त्वा हृषीकेशः शरणागतवत्सलः॥प्रहसन्सहसोत्थाय क्री

डांचक्रे पुनर्जले ॥५५॥ नारद उवाच॥एत
द्गुह्यतरं स्तोत्रं दुर्लभं देहधारिणाम् ॥ मया
तदाज्ञया प्रोक्तं तवाग्रे व्यासभावन॥ ५६॥
त्वयतन्नैव वक्तव्यं कस्याग्रेपि विनाज्ञया
॥स्वशिष्याग्रे शुकाग्रे वा गोपनीयं धरात
ले ॥ ५७ ॥ एतदेव स्वयं साक्षादगतीनां
गतिप्रदः ॥बुद्ध्याविष्टानिजांशेन पूर्णानन्दः
स्वलीलया ॥ ५८ ॥ कलिग्रस्ताञ्जना

न्स्वीयानुद्धर्तुं करुणानिधिः॥ स्वयमेवात्र
विख्यातं करिष्यति न संशयः॥ ५९॥
एतद्दिव्यसहस्रनाम परमानन्दैकसंवर्द्ध
नं लोकेस्मिन्किलकादिनामरचनालंकार
शोभान्वितम्॥ येषां कर्णपुटे पतिष्यतिम
हाभाग्यादिहालौकिकंतेषां नैव किमप्यल
भ्यमाचिरात्कल्पद्रुमाभं सताम्॥६०॥ इ
ति श्रीब्रह्मांडपुराणेध्यात्मकभागवते श्रुति

रहस्ये श्रीनारदव्याससंवादे पूर्णब्रह्मस्वरूपिश्रीकृष्णककाराद्यष्टोत्तरसहस्रनामस्तोत्रप्रकाशनं नाम चतुस्त्रिंशत्तमोऽध्यायः ३४



इदं ककारादिकृष्णाष्टोत्तरसहस्रनाम स्तोत्रं खानदेशीयरावेरग्रामनिवासिपरशुरामभट्टतनयगोविन्दशास्त्रिणा संशोधितं सख्याबोधकाङ्कनिवेशनेन परिष्कृतं च । तदेतत् मुंबय्यां श्रेष्ठिवर्यश्रीक्षेमराज श्रीकृष्णदास इत्यनेन स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणालये मुद्रयित्वा प्रकाशितम् ॥ संवत् १९५७, शके १८२२.

‘श्रीवेङ्कटेश्वर’ यन्त्रालयके पुस्तकोंका ‘बड़ासूचीपत्र’
)॥ आध आना भेजकर मँगालीजिये।

पुस्तकोंके मिलनेकापता–

खेमराज श्रीकृष्णदास,

“श्रीवेङ्कटेश्वर” छापाखाना–खेतवाड़ी–बंबई.

